# वेदशिक्षा

आरंभो हरिशब्दश्च सविसर्गश्चरो भवेत्
न सन्धिः प्रणवस्यादौ विरामो स्वरितो भवेत् १
अदुकारमकारश्च ज्ञेयास्संति सदात्र तु
तस्मात्सर्वश्चतुर्मात्रा ओमिति प्रणवं स्मृतः २
मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तदर्थमाह
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतो ऽपराधात्
३
अनक्षरमनायुष्यं विस्वरं व्याधिपीडितम्
अक्षराश्शस्त्ररूपेण वज्रं पतति मस्तके ४
ऋकारे परभूते च आरादेशो भवेद्यदि
स्वर्यते पूर्वतश्चैव भक्तिः प्रचयभाग्भवेत् ५
एकं पदं चंद्रमसि पूर्वं चेददडीरयन्
मरुतो श्वं नयन्त्या वः स क्षेमे वाज इत्यपि ६
विश्वशब्दानुदात्तान्त संहिताया भवेद्यदि
हा परं तत्र विज्ञेयमन्यत्र स्वरपूर्वकम् ७
जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः
अष्टौ विकृतयः प्रोक्तः क्रमपूर्वा मनीषिभिः ८
व्यासलक्ष्मीभरद्वाजशम्भ्वापिशलनिर्मिताः
कौहळेयकालात्रेयारण्याशिक्षा नवस्मृताः ९
शिक्षा च प्रातिशाख्यं च विरुद्धे भवतो यदि
शिक्षा बलवती चैव ह्यनार्षे सर्वसन्धिषु १०
शिक्षा च प्रातिशाख्यं च विरुद्धो भवतो यदि
शिक्षा दुर्बलमित्याहुः सिंहस्येव मृगौ यथा ११
मात्राद्विमात्रोऽनुस्वारो द्विमात्रान्मात्र एव तु
मात्रिकादपि संयोगे मात्रिकस्तु द्विरूपधृक् १२
व्यक्तिमध्यस्थनासिक्यः सपादो मात्रिकः स्मृतः

व्यक्तिरेषादितत्काला भवेदिति विनिश्चयः १३
संयोगादिरियाद्द्वित्वमनुस्वारात्परस्थितः
अनुस्वारो द्विरुच्येत संयोगे परतः स्थिते १४
ह्रस्वसंयोगयोर्मध्ये योऽनुस्वारो विधीयते
स एव द्वित्वमाप्नोति तदन्यो न द्विरुच्यते १५
पूर्वस्वरस्य चाल्पत्वमित्वमुत्वमिति त्रयम्
एतत्रयं विसृज्यैव स्वरभक्तिं समुच्चरेत् १६
भक्ते पूर्वस्वरो यश्च तस्य सादोऽनुमात्रिकः
लध्व्यर्थमात्रिको दीर्घो भवेदिति विनिश्चितः १७
ऋकारस्य स्वरूपं तु बुध्वा बोद्धुं हि शक्यते
स्वरभक्तिरतो विद्यादृकारमिह विस्तरात् १८
ऋकारस्य स्वरूपं हि श्लिष्टं पादचतुष्टयम्
पादेषु तेषु विज्ञेया पादावन्ते स्वरात्मकौ १९
अन्वा रेफस्य मध्ये द्वौ विज्ञेयो व्यञ्जनात्मकौ
रेफस्य चादि भूतं हि पादं पूर्वेण -------- २०
स्वरात्मकेन पादेन ह्युत्तरेणोत्तरं तथा
स्वरपादान्वितौ भागौ स्वरभक्तिरितीरितौ २१
हकारे पूर्वभागः स्यादुत्तरः शषसेषु च
हकारे संवृतां विद्याद्विवृतामितरत्र तु २२
ह्रस्वसारात्पराभक्तिर्निचेहे श्लिष्ट एव तु
सहैव पूर्ववर्णेण भक्तिस्तु स्वर्यतेऽत्र हि २३
प्राणपूर्वौ ङनौ दित्यमाप्नुते ह्यचरावहि
ङातो भवेट्टनातुस्तु सषयोः परभूतयोः २४
यथा क्रमं कतौ स्यातामागमाविति निर्णयः
ङकारादि पदान्ताद्वै तधयोः परभूतयोः २५
यथा क्रमं कगौ स्यातामागमा एति निर्णयः

अभिधानाख्यवर्णस्य प्रथमः परतो यदि २६
मुख्यप्रथमसद्भावे द्वित्वं न स्यात्सदोष्मणः
शसौ यत्रागमौ स्यातां प्रथमः परतो यदि २७
न तत्राभिनिधानोक्तिः प्रथमं द्विर्वदेद्बुधः
सामदीर्घयोर्मध्ये नासिक्य स्वरतो यदि २८
व्यक्तिस्स पादमात्रो यं तदा वैशेषिका स्मृता
पदद्वयं षष्टपदं च तथा नवपदं वदेत् २९
स्वरवर्णा विशेषे च विशेषे त्रिक्रमे क्रमात्
साम्यी वर्णस्वरौ यत्र तत्रैकस्संधिरार्षगः ३०
-----क्रम- वालं नवदेइ्युत्क्रमादिकम्
अन्तस्थाद्युदये पूर्वः पञ्चमस्तु द्विरुच्यते ३१
इतरादौ पदेरत्र स न चेति स्मृतो बुधैः
यत्र च सा वर्णौ दीर्घौ यत्र स्वारो न दृश्यते ३२
यत्र च विसर्गो न स्यात्तत्रैव च न वर्णतौ
यथा पुनः कृधिबलान्न सत्वविधिरिष्यते ३३
प्राधान्यात्पुनरित्यस्य निमित्तत्वात्कृधेरिति
यत्र स्यान्महिसृज्यध्वं तत्र षत्वं न पौरुषे ३४
ऋकारप्रतिषेधाच्च महि सप्त च दर्शनात्
कृध्युत्तरे पुनश्शब्दाद्विलोमे सत्वमिष्यते ३५
नाध्वरं चेति सूत्रेणावग्रहस्थो निषिध्यते
भारद्वाजशिक्षायाम् ।
अन्तःस्थाभ्यः पवर्गाच्च स्वरेभ्यः पूर्वतः स्थितौ ३६
त्रिष्टुप्शब्दस्तथानुष्टुप्ककारान्तावितीरितौ
अन्यत्र तु पकारान्तावेताविति विनिश्चितौ ३७
प्राणानामिति च ग्रैष्मी पदयोः परभूतयोः
पूर्वस्य तु विधेरत्र वैपरीत्यमिति स्थितिः ३८

न निमित्तात्ककारान्तौ पकारान्तौ च पौरुषे
अनुष्टुप्त्रिष्टुभौ शब्दावस्त्वनुष्टुभनीतिवत्  ३९
इडस्परिधिरित्युक्ते समिश्रत्वनिषेधकृत्
तत्रेड्यस्याप्यनेकत्वात्तथा विश्वायुरित्यपि  ४०
स्तोमाय ज्योतिरित्यत्र षत्वं सस्य न विद्यते
अनवग्रहपूर्वत्वाद्विध्यभावस्तथा सति  ४१
क्रमेण द्विपदं ब्रूयाद्व्युत्क्रमेणोत्क्रमेण च
स लक्षणं सर्वसंधौ जटा सा प्रोच्यते बुधैः  ४२

इति वेदशिक्षा समाप्ता

Courtesy of Oriental Research Institute, University of Mysore:
"Veda Śikṣā" Palm Leaf Manuscript #4772/19, Telugu script, 3 folios.